उपेन्द्रः पातु ब्रह्माणं आचार्यं पातु वामनः । अच्युतः पातु ऋग्वेदं यजुर्वेदमधोक्षजः ॥
कृष्णो रक्षतुसामं च अथर्वाणं चमाधवः ॥ उपद्रष्टास्तु येविप्रास्तेपि रुद्रेण रक्षिता ॥
यजमानं सपत्नीकं पुण्डरीकाक्षरक्षतु ॥ रक्षाहीनं तुयत्स्थानं तत्सर्वंरक्षतोहरिः ॥
वेदमंत्रै श्च कर्त्तव्या रक्षाशुभ्रै श्च सर्षपै ॥
तस्मात्सर्वप्रयत्नेन रक्षां कुर्यात्सदाबुधः

### अथ अग्न्युत्तारणमन्त्राः

समुद्रस्य त्त्वाव्वक याग्ने परिव्ययामसि । पावको ऽअस्मभ्यंठं शिवोभव ॥१॥
हिमस्य त्वा जरायुणाग्ने परि व्ययामसि ॥ पावको ऽअस्मभ्यंठं शिवोभव ॥२॥
अपामिदं न्ययनठं समुद्रस्य निवेशनम् ॥ अन्याँस्तेऽ अस्मत्त पन्तुहेतयः
पावकोऽ अस्मभ्यंठं शिवोभव ॥३॥
नमस्ते हरसेशोचिषे नमस्तेऽ अस्त्वर्च्चिषे ॥
अन्याँस्तेऽ अस्मत्तपन्तु हेतयः पावकोऽ स्मभ्यंठं शिवोभव ॥४॥

ॐ अग्ने पावक रोचिषामन्द्रया देवजिह्वया ॥ आदेवान्वक्षियक्षिच ॥५॥
ॐ सनः पावक दीदिवोग्ने देवाँ २ ऽइहावह ॥ उपयज्ञठं हविश्चनः ॥६॥
ॐ पावक यायश्चितयन्त्वा कृपाक्षामन् रुरुच ऽउषसोनुभानुना ॥
तूर्वन्नया मन्नेतशस्य नूरण ऽआपोघृणेन ततृषाणो ऽअजरः ॥७॥
ॐ नमस्ते हरसे शोचिषे नमस्ते ऽअस्त्वर्चिषे ॥ अन्याँस्ते अस्मत्त पन्तुहेतयः
पावको अस्मभ्यठं शिवोभव ॥८॥
ॐ नृष द्‌देवेडप्सुषदेव्वेड् वर्हिषदेव्वेड् वनसदेव्वेड् स्वर्विदेव्वेट् ॥९॥
ये देवा देवानांयज्ञिया यज्ञिया ७ संवत्सरीणमुपभागमासते ॥
अह्नतादोहविषोयज्ञे ऽअस्मिन्त्स्वयं पिबन्तु मधुनो घृतस्य ॥१०॥
ॐ ये देवा देवेष्वधि देवत्वमा यन्ये ब्रह्मणः पुर एतारो ऽअस्य ॥
येभ्योनऽऋते पवतेधाम किञ्चन नतेदिवोन पृथिव्याऽ अधिस्नुषु ॥११॥
ॐ प्राणदा ऽअपानदा व्यानदा व्वर्चोदा वरिवोदाः ॥
अन्याँस्ते ऽअस्मत्तपन्तु हेतयः पावको ऽशस्मभ्यठं शिवोभव ॥१२॥

### प्राण प्रतिष्ठा

ॐ आं ह्रीं क्रौं यं रं लं वं शं षं सं हं लं क्षं हं सः सोहम् अस्याः श्री (अमुकदेव) प्रतिमायाः प्राणा इह प्राणाः ॥ ॐ आँ ह्रीं क्रौं यं रं लं वं शं षं सं हं लं क्षं हं सः सोहं अस्याः श्री (अमुक देव) प्रतिमायाः जीव इहस्थितः ॥ ॐ आँ ह्रीं क्रों यं रं लं वं शं षं सं हं लं क्षं हं सः सोहं अस्याः श्री (अमुक देव) प्रतिमायाः सर्वेन्द्रियाणि वाङमनस्त्वक् चक्षुः श्रोत्र जिह्वाघ्राण पाणि पाद पायूपस्थानि इहैवागत्य सुखं चिरं तिष्ठन्तु स्वाहा ॥

ततः पञ्चामृतेन संस्नाप्य ।

ॐ आपोहिष्ठेत्यादि ऋचेनशुद्ध जलेन प्रोक्ष्य । स्थापित कलशोपरि संस्थाप्य ॥

**ॐ मनो जूति ज्जुषता माज्ज्यस्य बृहस्पति र्यज्ञमि मन्तन्नो त्वरिष्ठं यज्ञठं समिमं दधातु ॥ विश्वे देवासऽइह मादयंतामो३ म्प्रतिष्ठ ॥१॥**

ॐ एष वै प्रतिष्ठा न्नामयज्ञो यत्रै तेन यज्ञेन यजन्तं सर्वमेवप्रतिष्ठितंम्भवतु ॥
इति प्रतिष्ठाप्य ॥

### नेत्रोन्मीलनम्

ॐ वृत्रस्यासि कनीनं कश्चक्षुर्दा ऽअसि चक्षुर्मेदेहि ॥

गन्धादि पञ्चोपचारान्दत्वा संस्कार सिद्धये षोडश प्रणवावृत्तिं कुर्यात् अनेन अस्याः श्री (अमुक देव) प्रतिमायाः गर्भाधानादि षोडश संस्कारान् सम्पादयामि ॥ एवं वदेत् ॥ पुनः न्यासंविधाय कलशं शंख घण्टे च सम्पूज्य देवं ध्यायन् घण्टा नादं कृत्वापूजां कुर्यात् ॥

### अथप्रधानदेवतापूजनम् मन्त्र

**ॐ सहस्र शीर्षा पूरुषः सहस्राक्षः सहस्रपात् ॥**
**सभूमिठं सर्व्वत स्पृत्वात्यतिष्ठद्दशाङ्गुलम् ॥१॥**

ॐ हिरण्य वर्णां हरिणीं सुवर्णरजत स्रजां ॥ चन्द्रां हिरन्मयीं लक्ष्मीं जातवेदो मआवह ॥१॥

श्री लक्ष्मीनारायणमावाहयामि ।
(अनन्तर आसन के लिये पुष्प हाथ में लेकर)

**ॐ पुरुष ऽएवेद ठं सर्वं यद्भूतं यच्चभाव्यम् ।**
**उतामृतत्व स्येशानो यदन्नेनातिरोहति ॥२॥**

ॐ तां म आवह जातवेदो लक्ष्मी मनपगामिनीम् ॥
यस्यांहिरण्यं विन्देयंगामश्वंपुरुषानहम् ॥२॥

इत्यासनम् समर्पयामि ।

पाद्य के लिये जल में, श्यामाक, विष्णु क्रान्ता, कमल पुष्प, दूर्वा, जल आदि मिला कर लें ।

**ॐ एता वानस्य महिमा, तोज्यायाँ श्चपूरुषः ।**
**पादोस्य विश्वा भूतानि त्रिपाद स्यामृतन्दिवि ॥३॥**

ॐ अश्वपूर्णां रथमध्यां हस्तिनाद प्रबोधिनीम् ।
श्रियं देवीमुपह्वये श्रीर्मादेवीर्जुषताम् ॥३॥

इति पाद्यम् ।

## अथ अर्घ्यम्

अर्घ्य के लिये दूर्वा, तिल, दर्भ, सरसों जौ, चावल, चन्दन, जल में डालें तब अर्पण करें

ॐ त्रिपादूर्ध्वऽ उदैत्पुरुषः पादोस्येहाभवत्पुनः ॥

ततो विष्वङ् व्यक्रामत्साशनानशनेऽ अभि ॥४॥

ॐ काँसो स्मितां हिरण्य प्राकारमार्द्रां ज्वलन्तीम् तृप्तां तर्पयन्तीम् ॥

पद्मे स्थितां पद्मवर्णां तामिहोप ह्वये श्रियम् ॥४॥ अर्घ्यं समर्पयामि ॥

ॐ ततो विराड जायत विराजोऽ अधिपुरुषः ॥

सजातोऽ अत्यरिच्य तपश्चाद्भूमि मथोपरः ॥५॥

ॐ चन्द्रां प्रभासां यशसाज्वलन्तीं श्रियं लोके देवि जुष्टामुदाराम् ॥

तां पद्मनीं शरण महं प्रपद्ये अलक्ष्मी मेंनश्यतां त्वां वृणे ॥५॥ आचमनम् ॥

## मलापकर्षण स्नानम्

ॐ तस्मा यज्ञात्स र्व्वहुतः सम्भृतम्पृषदाज्ज्यम् ।

पशूँस्ताँश्चक्रे व्वायव्या नारण्याग्ग्राम्याश्चये ॥६॥

ॐ आदित्यवर्णे तपसोधिजातो बनस्पतिस्तव वृक्षोथविल्बः ॥

तस्य फलानि तपसानुदन्तु मायान्तरायाश्च वाह्या अलक्ष्मीः ॥६॥ स्नानम् ।

ॐपयः पृथिव्यां पयऽओषधीषु पयो दिव्यन्तरिक्षे पयोधाः ॥

पयस्वतीः प्रदिशः सन्तु मह्यम् ॥ पयः स्नानम् ततोशुद्धोदक स्ना०

ॐ दधिक्राव्णो ऽअकारिषं जिष्णो रश्वस्य व्वाजिनः ॥

सरभि नो मुखा करत्प्रण आयूंषितारिषत् ॥ दधिस्नानम्-ततोशुद्धोदक० ॐ घृतं घृत पावानः पिवतव्वसां वसापावानः पिवतान्तरिक्षस्य हविरसि स्वाहा । दिशः प्रदिश ऽआदिशोव्विदिश ऽउद्दिशोदिग्भ्यः स्वाहा ॥ घृतस्ना० ततोशु० स्ना० ॐ मधुव्वाता ऽऋतायतेमधु क्षरन्ति सिन्धव माध्वीर्न्नः सन्त्वोषधीः ॥

ॐ मधन क्तमुतोषसो मधुमत्पार्थिवरं रजः । मधुद्यौरस्तुनः पिता ॥ मधुस्ना० ॥ शु० स्ना० ॐ अपांरस मुद्वयसं सूर्ये सन्तं समाहितम् । अपांरसस्ययो रसस्तं व्वो गृह्णाम्युत्तममुपया मगृहीतो सीन्द्रायत्वा जुष्टं गृह्णाम्येषते योनिरिन्द्रायत्वा जुष्टत मम् ॥ शर्करास्ना० ततोशुद्धो०

ॐ काण्डात्काण्डात्प्ररोहन्ती परुषः परुषस्परि ॥ एवानोदूर्वे प्रतनुसहस्रेणशतेन च ॥ सुगन्धित तैल स्ना०, ततोशु० स्ना०

ॐ पञ्च नद्यः सरस्वति मपि यन्ति सस्रोतसः ॥
सरस्वती तुपञ्चधा सोदेशेभवत्सरित् ॥ पञ्चामृतस्ना० ततो शु० स्ना०

ॐ गन्ध द्वारां दुराधर्षां नित्य पुष्टां करीषिणीम् ।
ईश्वरीं सर्वभूतानां तामिहोपह्वये श्रियम् ॥ गन्ध (चन्दन) स्ना० । शु० स्ना०

ॐ अ॒ठं॰ शुनाते ऽअ॒ठं॰ शुः पृच्यताम्परुषापरुः ॥
गन्धस्ते सोममवतुमदायरसोऽअच्युतः ॥

सुगन्धित (उवटन) स्ना० । शु० स्ना०

ॐ शुद्ध वालः सर्वशुद्ध वालो मणि वालस्त ऽआश्विनाः । श्येतः श्येताक्षो रुणस्ते रुद्राय पशुपतये कर्णायामा ऽअवलिप्ता रौद्रा नभोरूपाः पार्जन्याः ॥ शुद्धोदकस्नानम् ।

पुनराचमनीयकम् ॥

श्रीसूक्त पुरुषसूक्त रुद्रसूक्तों से शंखमे से जल छोड़कर महाभिषेक करें ।

वस्त्र युग्मम् (दोवस्त्र)

ॐ तस्माद्यज्ञात्सर्वहुतऽऋचः सामानिषज्ञिरे ॥ छन्दांसि सिषज्ञिरे तस्माद्यजुस्तस्मादजायत ॥७॥ ॐ उपैतु मां देवसखः कीर्तिश्च मणिनासह ॥

प्रादुर्भूतो सुराष्ट्रेस्मिन् कीर्ति वृध्दि ददातुमे ॥७॥ वस्त्रयुग्मं० स० ॥ ततो आचमनीयम्

ॐ तस्मादश्वाऽअजायन्त येकेचोभयादतः । गावोहजाज्ञिरे तस्मात्तस्मा ज्जाताऽअजावयः ॥८॥ ॐ क्षुत्पिपासामलां ज्येष्ठांमलक्ष्मीं नाशयाम्यहम् ।

अभूतिमसमृद्धि चसर्वान्निर्णुदमे गृहात् ॥८॥ यज्ञोपवीतं स० ।

ॐ तंयज्ञं संबर्हिषिप्रौक्षन्पुरुषज्जातमग्रतः ॥ तेन देवाऽअयजन्तसाध्याऽऋषयश्चये ॥९॥

ॐगन्धद्वारां० ॥९० चन्दनं स०॥

ॐ अक्षन्नमीमदन्तह्यव प्रिया ऽअधूषत ।
अस्तोषतस्वभानवोविप्रानविष्ठयामती योजान्विन्द्रते हरी

अक्षतान् स०

हरिद्रा रञ्जितो देव ? सुख सौभाग्य दायकः ।
तस्मात्वां पूजयाम्यत्र दुःखशान्ति प्रयच्छ मे ॥ हरिद्रा चूर्णंस०

कुङ्कुमं कान्तिदं दिव्यं कामिनी काम सम्भवम् ।
कुंकुमेनार्चितोदेव प्रसीद परमेश्वर ।। कुंकुमं स०

सिन्दूरमरुणाभासं जपाकुसुम सन्निभम् ।
पूजितोऽसि मया देव प्रसीद परमेश्वर ? ।। सिन्दूरं स०

चक्षुर्भ्यां कज्जलं रम्यं सुभग ? शान्ति कारकः ।
कर्पूर ज्योतिरुत्पन्नं गृहाण परमेश्वर ।। कज्जलं स०

ॐ काण्डात्काण्डात्प्ररोहन्तीपरुषः परुषस्परि
एवानो दूर्वे प्रतनु सहस्रेण शतेन च ।।

दुर्वाङ्कुरान् स०

ॐ आर्द्रायः करिणींयष्टीं सुवर्णां हेममालिनीम् ।
सूर्यां हिरण्मयीं लक्ष्मीं जातवेदो मः आवह ।।

ॐ नमो विल्मिने च कवचिने च नमोवर्मिणे च व्वरूथिनेच नमः ।
श्रुताय चश्रुतसेनाय च नमो दुन्दुभ्याय चाहनन्याय च नमो घृष्णवे ।।

अनेन तुलसीदलानि, विल्व पत्राणि च समर्पयामि ।।

ॐ तांम आवह जातवेदो लक्ष्मीमनप गामिनीम् ।।
यस्यां हिरण्यं प्रभूति गावो दास्योश्वान् विन्देयं पुरुषानहम् ।।

ॐ अश्वत्थेवो निषदनं पर्णे वो व्वसतिष्कृता ।
गोभाज ऽइत्किलासथ यत्सनवथपूरुषम् ।।

ॐ याः फलिनीर्या ऽअफला ऽअपुष्पायाश्च पुष्पिणीः
ॐ बृहस्पति प्रसूतास्तान्नो मुञ्चन्त्वठं हसः ।।

ॐ महादेवीं च विद्महे विष्णु पत्नीञ्च धीमहि ।।
तन्नोदेवीः प्रचोदयात् ।। फलमालां स०

ॐ परिवाजपतिः कविरग्निर्हव्यान्यक्रमीत् । दधद्रत्नानिदाशुषे ।।

ॐ कर्दमेनप्रजाभूता मयि सम्भव कर्दम ।
श्रियं वासयमे कुलेमातरंपद्म मालिनीम् ।। रत्न मालां समर्पयामि ।

ॐ आपः स्रजन्तु स्निग्धानीचिक्लीत वसमे गृहे ।
निच देवीं मातरं श्रियं वासय मे कुले ।।

ॐ श्रीश्च ते लक्ष्मीश्च पत्न्यावहोरात्रेपार्श्वे नक्षत्राणि रूपमश्विनौ व्यात्तम् ।।
इष्णन्निषाणामुम्मं ऽइषाण सर्वं लोकम्मं इषाण पुष्प माला सं०

ॐ यत्पुरुषं व्यदधुः कतिधाव्यं कल्पयन् ।
मुखङ्किमस्यासीत्किम् वाहू किमूरूपादाऽउच्येते ॥१०॥

ॐ मनस, काममाकूतिं वाचः सत्यमशीय ।
पशूनां रूपमन्नस्य रसोयशः श्रीः श्रयतां यशः ।१०॥ पुष्पाणि सं०
ॐ अहिरिवभोगैः पर्येतिवाहुं ज्यायाहेतिं परिवाधमानः ।
हस्तघ्नोविश्वाव्वयुनानिविद्वान्पुमान्पुमाः सम्परिपातविश्वत ÷ ॥ सुगन्ध द्रवं समर्पयामि

ॐ ब्राह्मणोस्य मुखमासीद्वाहूराजन्न्य ÷ कृत ÷ ॥
उरू तदस्य यद्वैश्य ÷ पभ्द्याᳬ शूद्रोऽअजायत ॥११॥

ॐ यः शुचिः प्रयतो भूत्वा जुहुयादाज्यमन्वहम् ।
सूक्तं पञ्चदशर्चञ्च श्रीकाम सततं जपेत ॥११॥

ॐ धूरसिधूर्व धूर्वतन्धूर्व तंयोस्मान्धूर्वति तं धूर्वयं वयंधूर्वामः ।
देवानामसिवन्हितमठ सस्नितमं पप्रितमञ्जुष्टतमन्देव हूतमम् ॥

धूपं आघ्रापयामि ।

ॐ चन्द्रमा मनसोजातश्चक्षोः सूर्योऽजायत ॥
श्रोत्राद्वायुश्चप्राणश्चमुखादग्निरजायत ॥१२॥

ॐ सरसिजनिलये सरोज हस्ते धवलतरांशुकगन्धमाल्यशोभे ?
भगवति ? हरिवल्लभे ? मनोज्ञे त्रिभुवन ? भूतकरि ? प्रसीदमह्यम् ॥

ॐ अग्निर्ज्योति ज्योतिरग्निः स्वाहा सूर्योः ज्योति ज्योतिः सूर्यः स्वाहा ॥
अग्निर्वर्च्चो ज्योतिर्वर्चः स्वाहा सूर्योवर्चो ज्योतिर्वर्चः स्वाहा ॥
ज्योतिः सूर्यः सूर्यो ज्योतिः स्वाहा ॥

दीपं दर्शयामि ॥ दीपकजलायें और अक्षत छोड़ कर घंटा वजायें ।

ॐ नाभ्याऽआसीदन्तरिक्षठशीर्ष्णोद्यौःसमवर्त्तत ॥
पद्भ्याम्भूमिर्दिशᳬश्रोत्रात्तथालोकाँ २॥ ऽअकल्पयन ॥

ॐ आर्द्रां पुष्करिणीं पुष्टिं सुवर्णां हेममालिनीम्
सूर्यां हिरण्मयीं लक्ष्मीं जातवेदोमआवह ।

आदौनैवेद्यं जलेनाभ्युक्ष्य, गन्धपुष्प तुलसीदलादिभिराच्छाद्य ।
धेनुमुद्रया अमृतीकृत्य । योनिमुद्रां प्रदर्श्य । सत्यन्त्वर्तेन परिषिञ्चामि प्रातः

(सायं) ऋतं त्वा सत्येनपरिषिञ्चामि ।। घंटा वादयेत् ।।
ग्रास मुद्रां प्रदर्श्य ।।

ॐ प्राणाय स्वाहा (अंगुष्ठ अनामिका कनिष्ठाभिः ।

ॐ अपानाय स्वाहा (अंगुष्ठ तर्जनी मध्यमाभिः)

ॐ उदानाय स्वाहा (अंगुष्ठ तर्जनी मध्यमानामिकाभिः) ।। ॐ समानाय स्वाहा (सर्वाङ्गुलिभिः) । नैवद्यं निवेदयामि नमः मध्ये मध्ये आचमनोयं समर्पयामि नमः ।। उत्तरापोषणार्थेपुनर्नैवेद्यं निवेदयामि नमः । पुनराचमनीयं समर्पयामि नमः ।

ॐ यत्पुरुषेण हविषा देवायज्ञमतन्वत ।
व्वसन्तोस्यासीदाज्ज्यङ्ग्रीष्मइध्मः शरद्धविः ॥१४॥

ॐ आर्द्रांयः करिणींयष्टिं पिङ्गलां पद्ममालिनीम् ।
चन्द्रां हिरण्मयीं लक्ष्मीं जात वेदोमआवह ।।१४।। आचमनम् स० नमः ।।

करोद्वर्तनकं ईश ? सुगन्धैः परिवासितैः ।।

ईप्सितंमेवरं देहि परत्र चपराङ्गतिम् ।। करोद्वर्तनम् स० नमः ।। हस्त प्रक्षालनार्थे जलम् गन्धतोय समानीतं सुवर्ण कलशे स्थितम् । हस्त प्रक्षालनार्थाय पानीयं ते निवेदये ।।

### ऋतुफलम्

ॐ याः फलिनीर्याऽअफलाऽअपुष्पा याश्चपुष्पिणीः ।
बृहस्पति प्रसूतास्ता नोमुञ्चन्त्वंहसः ॥

ऋतुफलानिस० नमः ।।

### ताम्बूल पुङ्गीफलम्

ॐ सप्तास्यासन्परिधयस्त्रिः सप्तसमिधः कृताः ॥
देवायद्यज्ञन्तन्वानाऽअ बध्नन्पुरुषम्पशुम् ॥१५॥

ॐ ताम्मऽआवह जात वेदो लक्ष्मीमनपगामिनीम् ।
यस्यां हिरण्यं प्रभूतिगावो दास्योश्वान्विन्देयंपुरुषानहम् ।।१५।।

ताम्बूलपूगीफलानिस० नमः

### दक्षिणां द्रव्यम्

ॐ हिरण्यगर्भ समवर्तताग्रे भूतस्य जातः पतिरेकऽआसीत् ।
सदाधार पृथिवींद्यामुतेमां कस्मैदेवाय हविषा विधेम ॥

स्वर्णमयीं दक्षणां स० नमः

ॐ यज्ञेनयज्ञमयजन्त देवास्तानिधर्माणि प्रथमान्यासन् ।
तेहनाकम्महिमानः सचन्त यत्रपूर्वेसाध्याः सन्ति देवाः ॥

साष्टांगप्रणामः ॥

## नीराजनम्

घृतकी वर्ति व कर्पूर से आरतीपात्र में रखकर गन्धपुष्प से पूजन कर खड़े होकर आरती करै घंटे वजते रहैं मंत्र

ॐ आरात्रि पार्थिवठं रजः पितुरं प्रायिधामभिः ।
दिवः सदां ७ सिवृहतीवितिष्ठसऽआत्वेषं वर्तते तमः ॥

चन्द्रादित्यौ चधरणी विद्युदग्निस्तथैव च ।
त्वमेवसर्व ज्योतिंषि आर्तिक्यं प्रतिगृह्यताम् ॥

## मन्त्र पुष्पाञ्जलिः ॥

ॐ राजाधिराजायप्रसह्य साहिने नमो वयं वैश्रवणाय कुर्महे समे कामान्काम कामाय मह्यं ॥ कामेश्वरो वैश्रवणो ददातु कुवेरायवैश्रवणाय राजाधिराजाय महाराजाय नमः ॥ ॐ स्वस्ति साम्राज्यं भौज्यं स्वाराज्यं वैराज्यं पारमेष्ठ्यं राज्यं महाराज्यमाधिपत्यमयं समन्तपर्यायीस्यात् सार्वभौमः सार्वायुषः आन्तादापरार्धात् ॥ पृथिव्यै समुद्रपर्यन्ताया एकराडिति ॥ तदप्येषश्लोकोभिगीतो मरुतः परिवेष्टारो मरुत्तस्या वसन्गृहे ॥ आवीक्षितस्य कामप्रेर्विश्वेदेवाः सभासद इति ॥

ॐ विश्वतश्चक्षुरुतविश्वतोमुखो विश्वतो वाहुरुत विश्वतस्पात् ॥
सम्बाहुभ्यान्धमति सम्पतत्रैर्द्यावाभूमी जनयन्देव एकः ॥

सेवन्तिका वकुल चम्पकपाटलाब्जैः ॥ पुन्नागजाति करवीर रसाल पुष्पैः ॥ विल्वप्रवाल तुलसीदल मञ्जरीभिः त्वांपूजयामि जगदीश्वर ? मे प्रसीद ॥ मंत्रपुष्पाञ्जलिस० नमः

## ध्यानम् नमस्कारः

ॐ अद्भ्यः सम्भृतः पृथिव्यैरसाच्चविश्वकर्म्मणः समवर्त्तताग्रे ॥
तस्य त्वष्टा विदधद्रूपमेति तन्मर्त्यस्यदेवत्वमाजानमग्रे ॥१॥
ॐ वेदाहमेतम्पुरुषम्महान्तमादित्य वर्णन्तमसः परस्तात् ॥
तमेवविदित्वातिमृत्युमेतिनान्यः पन्थाविद्यतेयनाय ॥२॥
ॐ प्रजापतिश्चरतिगर्भेऽअन्तरजायमानोवहुधाविजायते ॥
तस्ययोनिम्परिपश्यन्तिधीरास्तस्मिन्हतस्थुर्भुवनानि विश्वा ॥३॥

ॐ योदेवेभ्यऽआतपतियोदेवानाम्पुरोहितः ॥
पूर्व्वोयोदेवेभ्यो जातो नमोरुचाय ब्राह्मये ॥४॥

रुचम्ब्रा_ह्मञ_नयन्तो देवाऽअग्रे तदब्रुवनू ॥
यस्त्वैवम्ब्राह्मणो विद्यात्तस्य देवाऽअसन्वशे ॥५॥

ॐ श्रीश्च ते लक्ष्मीश्च पत्क्न्या वहोरात्रेपार्श्वे नक्षत्राणिरूपमश्वि नौ व्यात्तम् ॥
इष्णान्निषाणाम्मुम्म ऽइषाण सर्व्वलोकम्म ऽइषाण ।

ॐ नारायणाय विद्महे वासुदेवाय च धीमहि तन्नो विष्णुः प्रचोदयात् ।
ॐ महादेव्यै विद्महे दुर्गायै धीमहि तन्नो देवीप्रचोदयात् ॥

तत्पुरुषाय विद्महे महादेवायधीमहि ।
तन्नोरुद्रः प्रचोदयात् ।

ॐ महाविष्णवे नमः स्तुतिपाठं स० ।। तत :—

जितं ते पुण्डरीकाक्ष नमस्ते विश्वभावन ।
सुब्रह्मण्य नमस्तेऽस्तु महापुरुष पूर्वज ॥१॥
नमो हिरण्यगर्भाय प्रधान व्यक्तिरूपिणे ।
ॐ नमो वासुदेवाय शुद्धज्ञान स्वरूपिणे ॥२॥

देवानां दानवानां चसामान्यमसिदैवतम् ।
सर्वदाचरणद्वन्द्वं व्रजामिशरणं तव ॥३॥

एकस्त्वमसि लोकस्यस्रष्टा संहारकस्तथा ।
अध्यक्षश्चानुमन्ता चगुणमाया समावृतः ॥४॥
संसार सागरंघोरंमनन्तं क्लेश भाजनम् ।
त्वमेवशरणं प्राप्य निस्तरन्तिमनीषिणः ॥५॥

न ते रूपं न चाकारो नायुधानि न चास्पदम् ।
तथाऽपि पुरुषाकारो भक्तानां त्वं प्रकाशसे ॥६॥

नैवकिञ्चित्परोक्षं ते प्रत्यक्षोऽसिन कस्यचित् ।
नैकं किञ्चिदसाध्यंतेन च साध्योऽसिकस्यचित् ॥७॥

कार्याणांकारणंपूर्वं वचसां वाच्यमुत्तमम् ।
योगिनांपरमांसिद्धिं परमं तेपदं विदुः ॥८॥

अहंभीतोऽस्मिदेवेशसंसारेऽस्मिन्महाभये ।
त्राहिमांपुण्डरीकाक्षन जाने शरणंपरम ॥९॥

कालेष्वपि चसर्वेषु दिक्षुसर्वासु चाच्युत ।
शरीरेऽपिगतौ चापिवर्ततेमेमहद्भयम् ॥१०॥

त्वत्पादकमलादन्यन्नमे जन्मान्तरेष्वपि ।
निमित्तं कुशलस्यास्तियेनगच्छामिसद्गतिम् ॥११॥

विज्ञानंयदिदं प्राप्तं यदिदं ज्ञानमर्जितम् ।
जन्मान्तरेऽपि मेदेवमाभूदस्यपरिक्षयः ॥१२॥

दुर्गतावपि जातायां त्वंगतिस्त्वंमतिर्मम ।
यदिनाथं चविज्ञेयं तावतास्मि कृती सदा ॥१३॥

आकाम कलुषं चित्तं ममते पादयोः स्थितम् ।
कामये वैष्णवत्वंतुसर्वजन्मसुकेवलम् ॥१४॥

कृष्णाय वासुदेवाय हरयेपरमात्मने ।
प्रणतः क्लेशनाशाय गोविन्दाय नमोनमः ॥१५॥

परिवर्ततिेषुकालेषुपरिक्षीणेषुवन्धुषु ।
त्राहिमां कृपयाकृष्णशरणागतवत्सल ? ॥१६॥

कृष्णं नारायणं वन्दे कृष्णं वन्दे वृजप्रियम् ।
कृष्णं द्वैपायनं वन्दे कृष्णं वन्दे पृथा सुतम् ॥१७॥

## आत्म समर्पणम्

रत्नाकरोऽस्ति सदनं गृहिणी च पद्मा,
देयं किमस्तिभवते जगदीश्वराय ।
राधा गृहीतमनसेऽमनसे चं तुभ्यं,
दत्तंमयानिजमनं तदिदं गृहाण ॥१॥

हे कृष्ण ? कृष्ण ? भगवान् ? मम चित्तभृङ्गः ।
आयाति कदापिभवतश्चरणारविन्दे ।
देहादिपुष्पनिरत कृपया तदानीम् ।
विक्षस्यसे वामनयेन निजंपादाब्जम् ॥२॥

संसार सागरान्नाथो पुत्र-मित्र-गृहाऽकुलात् ।
गोप्तारौमेयुवामेवप्रपन्नभयमञ्जनौ ॥३॥

योऽहं ममास्तियत्किञ्चिदिहलोकेपरत्र च ।
तत्सर्वंभवतेरद्य चरणेषु समर्पितम् ॥४॥

अहमस्मि अपराधानांमालयस्त्यक्त साधनः ।
अगतिश्चततो नाथौ भवतामेवमेगति ॥५॥

तवैवा ऽस्मिराधिकाकान्त कर्मणा मनसा गिरा ।
कृष्णकान्तेतवैवाऽस्मित्वमेवगतिर्मम ॥६॥

शरणं वां प्रपन्नोऽस्मि करुणानिकराकरौ।
प्रसादं कुरुतं दास्यंमयिदुष्टे अपराधिनि ॥७॥

मज्जन्मनोफलमिदं मधुकैटभारे। मत्प्रार्थनीयमदनुग्रहमेषमेव।
त्वद्भृत्य भृत्य परिचारक, भृत्यभृत्य। भृत्यस्यभृत्यमितिमांस्मर लोकनाथ ? ॥८॥

पापोंऽहंपाप कर्माऽहंपापात्मा पापसम्भवः।
त्राहि नां सर्वदा नाथ सर्वपापहरोभव ॥९॥

अनायासेनमरणं विना दैन्येन जीवनम्।
देहान्तं तवसान्निध्यं देहिमे जगदीश्वरः ॥१०॥

इस महापुरुष विद्यास्तव तथा शरणागत स्तोत्र से प्रार्थना व आत्मसमर्पण करें।

## प्रदिक्षणा

ॐ यः शुचिः प्रयतोभूत्वा जुहुयादाज्यमन्वहम्।
सूक्तंपञ्चदशर्चञ्च श्रीः कामः सततं जपेत् ॥१॥

ॐ ये तीर्थानिप्रचरन्तिसृका हस्ता निषङ्गिणः।
तेषा७सहस्रयोजनेवधन्वानि तन्मसि ॥२॥

यानिकानि च पापानि जन्मातर कृतानि च।
तानि तानि च प्रणस्यन्ति प्रदक्षिणां पदे पदे ॥३॥

तदनन्तर महाप्रभु को साष्टाङ्ग प्रणाम करें। मनः शिर, दृष्टि, वक्ष, वाणी, पैर, हाथ, जानु सेयुक्त साष्टाङ्क, हाथ, पैर, शिर, मन, बुद्धि युक्त पञ्चाङ्ग प्रणाम होती है।

परिक्रमा, देवी की एक, रवि कीसात, ३ गणेशजी की, ४ केशव, आधी शिवजी की कही गई है।

इस प्रकार भगवान पुरुषोत्तम की पूजा करके, पुरुषसूक्त की प्रत्येक ऋचा से या अन्य मन्त्र से भगवान पापापहा महाविष्णु का तर्पण करें। मन्त्र में इसे जोड़कर तर्पण करें।

भगवान् पापापहामहा विष्णु स्त्टप्यताम् ॥

## सर्वतोभद्रपीठस्थापन

यज्ञवेदी में प्रधान देव की स्थापना को; सर्वतोभद्रपीठ की रचना करें। वर्गाकार चतुष्कोण १९/१९ पंक्तिओं अर्थात् १८/१८ कोष्टकों का कपड़े पर वनायें।

कुल कोष्ट ३२४ होंगे। इनमें १२ खण्डेन्दु श्वेत; २० कृष्ण शृंखला ८८ हरित वल्ली ७२ लाल-भद्र, ९६ श्वेत वापी, २० पीत परिधि १६ श्वेत; मध्य में अष्टदल कमल वनायें। बाहर चारों ओर क्रमशः सत, रज, तम (श्वेत-रक्त-कृष्ण) की परिखा वनायें।

**खण्डेन्दु**—ईशान, अग्नि, नैर्ऋत्य, वायव्य कोणों के ३/३ श्वेत

**कृष्ण शृंखला**—खण्डेन्दु के बीच के चारों दिशाओं के खाने छोड़ टेड़े उसी के नीचे बराबर के ५ काले (उड़द, तिलादि के) होंगे।

**वल्ली**—खण्डेन्दु के अगल बगल के श्वेत १/१ खाने के नीचे कृष्ण शृंखला के दोनों ओर के ११/११ चारों दशाओं के ८८ हरितया नील कहलायेंगे।

**भद्र**—एकदम ऊपर नीले (काले) रंग के कोष्ट से सटे ५ उसके नीचे नीले (कृष्ण) से सटे ३/३ उसके नीचे का १ कुल ६/६ चारों दशाओं के लालरङ्ग के होंगे।

**वापी**—भद्र से सटे ऊपर के २, उसके नीचे ४, उसके नीचे ६, उसके नीचे ६, उसके नीचे ४, उसके नीचे २ खाने श्वेत-बराबर सीधे ये प्रत्येक दशा में २४/२४ होंगे।

परिधि—भीतर के १६ (अष्टदल कमल) के चारों ओर पीले २० खाने हैं

पद्म—भीतर के १६ लालवर्ण के मयकर्णिका पद्म कहलायेंगे। इन ३२४ खानों के बाहर चारों ओर श्वेत उसके चारों ओर लाल सबके चारों ओर काली परिधि सत, रज, तम की होती है।

### अथ सर्वतोभद्र पूजन विधि

भद्र के बीच कर्णिका पर अक्षत पुष्प हाथ में लेकर ब्रह्मा जी का आवाहन करें। संकल्प कर आवाहन

**ॐ ब्रह्म जज्ञानं प्रथमं पुरस्ताद्वि सीमतः सुरुचो वेन आवः।**
**स बुध्न्याऽउपमा अस्यविष्ठाः सतश्चयोनिमसतश्च वि वं॥**

श्री ब्रह्मणे नमः; ब्रह्माणमावाहयामि; स्थापयामि; इह आगच्छ, इह तिष्ठ; मम पूजां गृहाण सुप्रीतो, सुखदो; वरदो भवः।१। इसी प्रकार अन्य सभी देवों के प्रति भी करें। उत्तर वापी में सोम का आवाहन करें—

**व्वय ६ सोमव्रते तव मनस्तनूषु बिब्भ्रत %।**
**प्रजावन्तऽ सचेमहि॥२॥**

उत्तर वापी में सोमायनमः। सोमं आवाहयामि।
ईशान कोण में खण्डेन्दु में ईशान का आवाहन

**ॐ तमीशानञ्जगतस्तस्थुषस्प्पतिन्धियञ्जिन्न्वमवसेहू महेव्वयम्।**
**पूषानो यथाव्वेदसामसद्वृधे रक्षिता पायुरदब्धऽस्वस्तये॥३॥**

ईशान खण्डेन्दु में ईशानाय नमः; ईशानमावाहयामि।
पूर्व की वापी में इन्द्र का आवाहन :—

**ॐ त्रातारमिन्द्र वितारमितारमिन्द्रॐहवेहवेसुहव ६शूरमिन्द्रम्।**
**ह्वयामि शक्रम्पुरुहूतमिन्द्रॐस्वस्तिनो मघवा धात्विन्द्रः॥४॥**

इन्द्राय नमः; इन्द्रमावाहयामि०।
अग्निकोण के खण्डेन्दु में अग्नि का आवाहन

ॐ त्वन्नोऽअग्ने तव देवपायुभिर्मघोनोरक्षतन्वश्च वन्द्य ।
त्राता तोकस्य तन ये गवामस्य निमेषꣳरक्षमाणस्तव व्रते ॥५॥

अग्निकोण के खण्डेन्दु में—अग्नये नमः ; अग्निमावाहयामि० ॥
दक्षिण वापी में यम का आवाहन० ।

ॐ यमाय त्वाङ्गिर स्वते पितृमते स्वाहा ।
स्वाहा धर्म्मायस्वाहा धर्म्मः पित्रे ॥६॥

यमाय नमः; यममावाहयामि
नैऋत्य की वापी में :—निऋति का आवाहन ।

ॐ असुन्वन्तमयजानानमिच्छस्तनस्येत्यामन्विहितस्करस्य ।
अन्यमस्मदिच्छसात ऽइत्या नमो देविनिऋते तुभ्यमस्तु ॥७॥

नैऋत्य के खण्डेन्दु में—निऋतये नमः निऋतिमावाहयामि० ॥
पश्चिम वापी में वरुण का आवाहन

ॐ तत्वायामि ब्रह्मणाव्वन्दमानस्तदाशास्तेयजमानो हविर्भिः ।
अहेडमानोव्वरुणे हवोध्युरुशꣳसमानऽआयुःप्रमोषीः ॥८॥

वरुणाय नमः । वरुणमावाहयामि० ॥
वायव्य खण्डेन्दु में वायु का आवाहन

ॐ आनो नियुद्भिः शतिनीभिरध्वरꣳसहस्रिणीभि रुपयाहियज्ञम् ।
व्वायोऽअस्मिन्त्सवने मादयस्व य यूयम्पात स्वस्तिभिःसदानः ॥९॥

वायवे नमः वायुमावाहयामि० ।
लोहितभद्र में—अष्टवसुओं का आवाहन ।

ॐ सुगावो देवाःसदनाऽअकर्मणऽआजग्मेदꣳ सवनञ्जुषाणः ।
भरमाणाव्वहमानाहवीꣳष्यस्मेधत्तव्वसवोव्वसूनि स्वाहा ॥१०॥

अष्टवसुभ्यो नमः अष्टवसूनावाहयामि० ।
सोम ईशान के मध्यपीठ में एकादशरुद्र का आवाहन

ॐ रुद्राःसꣳसृज्य पृथिवीम्बृहज्योतिःसमीधिरे ।
तेषां भानुरजस्रऽइच्छुक्रो देवेषुरोचते ॥११॥

सोमरुद्र के बीच लालभद्र में, एकादशरुद्रेभ्यो नमः
एकादश रुद्रानावाहयामि० ॥

ईशान-इन्द्र के मध्य द्वादश आदित्यों का आवाहन

ॐ यज्ञो देवानां प्रत्येति सुम्नमादित्यासोभवतामृडयन्तः।
आवोर्व्वाची सुमतिर्व्ववृत्यादꣳहोश्चिद्यावरिवो वित्तरासदादित्ये भ्यस्त्वा ॥१२॥

द्वादश आदित्यानावाहयामि । द्वादशादित्येभ्यो नमः ।
इन्द्र और अग्नि के मध्य अश्विद्वय का आवाहन

ॐ अश्विना तेजसा चक्षुः प्राणेन सरस्वतीव्वीर्य्यम् ।
व्वाचेन्द्रो बलेनन्द्राय दधुरिन्द्रियम् ॥१३॥

अश्विभ्यां नमः; अश्विनीकुमारद्वयमावाहयामि ।
अग्नि और यम के मध्य सपैतृक विश्वेदेवों का आवाहन

ॐ विश्वेदेवा सऽआगत शृणुतामऽइमꣳ हवम् । एदम्बर्हिर्निषीदत ॥
उपयामगृहीतोऽसिव्विश्वेब्भ्यस्त्वादेवेभ्यऽएषतेयोनिर्व्विश्वेभ्यस्त्वादेवेभ्यः॥१४॥

सपैतृकविश्वेभ्योदेवेभ्यो नमः । सपैतृक विश्वान्देवानावाहयामि० ॥०
यम और नैऋति के मध्य सप्तयक्षों का आवाहन

ॐ अभित्यन्देवꣳसवितारमोण्योः कविक्रतुमर्च्चाभिसत्यसवꣳरत्नक धामभिप्प्रियं मतिङ्कविम् ॥ ऊद्ध्वायस्यामतिर्भाऽअदिद्युतत्सवीमनि हिरण्यपाणिरमिमीत सुक्रतु ÷ कृपास्व ÷ ॥ प्रजाब्भ्यस्त्वाप्प्रजास्त्वानु प्राणन्तु प्प्रजास्त्वमनु प्प्राणिहि ॥१५॥

सप्त यक्षेभ्यो नमः; सप्त यक्षानावाहयामि० ।
निर्ऋति और वरुण के मध्य रक्तभद्र में अष्टकुलनागों का आवाहन

ॐ नमोऽस्तु सर्प्पेब्भ्यो ये के चपृथिवीमनु ।
येऽअन्तरिक्षे ये दिवि तेब्भ्य ÷ सर्प्पेब्भ्यो नमः ॥१६॥

अष्ट कुल नागेभ्यो नमः; अष्टकुल नागानावाहयामि० ।
वरुण और वायु के मध्य लालभद्र में गन्धर्वाप्सराओं का आवाहन

ॐ ऋताषाड् ऋतधामाग्निर्गन्धर्व्वस्तस्यौषधयोप्सरसो मुदोनाम् ।
सनऽइदं ब्रह्म क्षत्रम्पातु तस्मै स्वाहाव्वाट् ताब्भ्य ÷ स्वाहा ॥१७॥

लालभद्र में;—गन्धर्वाप्सरसेभ्यो नमः; गन्धर्वाप्सरसानावाहयामि०
ब्रह्मा और सोम के मध्य सोमवापी में स्कन्द का आवाहन

ॐ यदक्रन्दःप्रथमञ्जायमानऽउद्यन्त्समुद्रादुतवापुरीषात् ।
श्येनस्य पक्षा हरिणस्य बाहू ऽउपस्तुत्यम्महि जातन्तेऽअर्वन् ॥१८॥

श्वेत वापी में—स्कन्दायनमः; स्कन्दमावाहयामि ।

श्वेतवापी में नन्दीश्वर का आवाहन

ॐ आशु%शिशानो व्वृषभो नभीमोघनाघनऽक्षोभणश्चर्षणीनाम् ।
सङ्क्रन्दने निमिषऽएक वीरऽशतᳬसेनाऽअजयत्साकमिन्द्र ÷ ॥१९॥

श्वेतवापी में—नन्दीश्वराय नमः; नन्दीश्वरमावाहयामि० ।

श्वेत वापी में शूल का आवाहन ।

ॐ यत्ते गात्रादग्निनापच्यमानादभिशूलन्निहतस्यावधावति ।
मातद्भूम्यामाश्रिषन्मातृणेषु देवेब्भ्यस्तदुशद्भ्योरातमस्तु ॥२०॥

शूलाय नमः; शूलमावाहयामि० ।

ॐ कार्षिरसि समुद्रस्य त्वाक्षित्याऽउन्नयामि ।
समापोऽअद्भिरग्मतसमोषधीमिरोषधीः ॥२१॥

वहीं पर महा कालाय० महा कालम् ॥

ॐ शुक्र ज्योतिश्च चित्रञ्ज्योतिश्च सत्यञ्ज्योतिश्चज्ज्योतिष्माँश्च ।
शुक्रश्च ऋतपाश्चात्यᳬ हा ÷ ॥२२॥

ब्रह्म और ईशान के बीच-कृष्णश्रृंखला-में-दक्षादि प्रजापतिभ्यो नमः
दक्षादि प्रजापतीन आवाहयामि ।

ॐ तामग्निवर्णां तपसा ज्वलन्तीं वैरोचनीं कर्मफलेषु जुष्टाम् ।
दुर्गां देवीं शरणमहं प्रपद्येसुतरसितरसेनमः ॥२३॥

ब्रह्म और इन्द्र के बीच-श्वेत-वाणी-में-दुर्गादेवीमावाहयामि ।

ॐ इदंव्विष्णुर्व्विचक्रमे त्रेधानिदधेपदम् ।
समूढमस्य पाᳬसुरे स्वाहा ॥२४॥

विष्णवे नमः विष्णुमावाहयामि ।० वहींपर

ॐ पितृब्भ्य ÷ स्वाधायिब्भ्य ÷ स्वधानमऽपितामहेब्भ्य ÷ स्वधायिब्भ्य ÷
स्वधानमऽप्प्रपिता महेब्भ्यऽस्वधायिब्भ्य ÷ स्वधानम ÷ ।
अक्षन्न्पितरोमीमदन्त पितरोऽतीतृपन्त पितरऽपितरऽशुन्धध्वम् ॥२५॥

ब्रह्म-अग्नि के बीच-कृष्ण श्रृङ्खला-में-स्वधायै नमः स्वधामवाहयामि ।० वहींपर

ॐ परम्मृत्योऽअनुपरे हि पन्थांयस्तेऽअन्न्यऽइतरोदेवयानात् ।
चक्षुष्मतेश्रृण्वते तेब्ब्रवीमिमान ÷ प्प्रजाᳬरीरिष्षोमोतव्वीरान् ॥२६॥

ब्रह्म-यम के बीच-श्वेत वापी-में-मृत्युरोगेभ्यो नमः मृत्युरोगानावाहयामि ।

ॐ गणानान्त्वा गणपतिं हवामहे कविं कवीनामुपमश्रवस्तमम् ।
ज्येष्ठराजं ब्रह्मणां ब्रह्मणस्पत आनः शृण्वन्नूतिभिः सीदसादनम् ॥२७॥

ब्रह्म निर्ऋति के बीच-कृष्ण शृङ्खला-में गणपतये नमः गणपतिमावाहयामि ।

ॐ अप्स्वग्ने सधिष्ट्वसौषधीरनुरुध्यसे । गर्ब्भेसञ्जायसेपुन ÷ ॥२८॥

ब्रह्म-बरुण के बीच-श्वेतवापी-में अद्भ्यो नमः अपमावाहयामि ।

ॐ मरुतो यस्याहिक्षयेपाथा दिवोव्विमहसꣳ ।
ससुगोपात मोजन ÷ । मरुद्भ्यो नमः ॥२९॥

ब्रह्म-वायु के बीच शृङ्खला में मरुद् गणानावाहयामि ।

ब्रह्म के पादमूल में-कर्णिका के निम्न भाग में जल के अधिपति अधिशयन कर्त्ता अधिवासी तीन देवों का आवाहन करें ।

ॐ स्योनापृथिवी नोभवानृक्षरानिवेशनि । यच्छानꣳशर्म्मसप्रथाꣳ ॥३०॥

पृथिव्यै नमः पृथिवीमावाहयामि ।

ॐ पञ्चनद्य ÷ सरस्वतीमपि यन्ति सस्रोतसꣳ ।
सरस्वती तु पञ्चधा सो देशे भवत्सरित ॥३१॥

गंगादि पवित्र नदीभ्यो नमः गङ्गादि नदी आवाहयामि ।

ॐ समुद्रोऽसि नभस्वानार्द्र दानुꣳशम्भूर्म्मयोः भूरभिमाव्वाहि
स्वाहा वस्यूरसिदुवस्वाञ्च्छम्भूर्म्मयो भूरभिमाव्वाहि स्वाहा ॥३२॥

सप्तसागरेभ्यो नमः सप्तसागरानावाहयामि ।

ॐ परित्वागिर्व्वणो गिरऽइमाभवन्तु व्विश्वत ÷ ।
व्वृद्धायुमनु वृद्धयो जुष्टा भवन्तु जुष्टयꣳ ॥३३॥

कर्णिका के ऊपर-मेरवे नमः मेरुमावाहयामि ।

मण्डल के बाहर परिखा (सतोगुण) में-उत्तर से व्वायव्यपर्यन्त ८ दिशाओं में आयुधों का आवाहन, पूजन क्रमशः करें ।

ॐ गणानान्त्वा ॥३४॥

ॐ गणानान्त्वा-गदायै नमः गदामावाहयामि ।

ॐ त्रिꣳ० शद्धामविराजति वाक्पतङ्गा यधीयते ।
प्रति वस्तोरहद्युभि ÷ ॥३५॥

त्रिशूलाय नमः त्रिशूलम् आवाहयामि ।

ॐ महाँ २॥ इन्द्रो वज्रहस्तऽषोडशीशर्म्म यच्छतु ।
हन्तु पाप्मानं चोस्मान्द्वेष्टि उपयाम गृहीतोऽसि महेन्द्राय त्वैषतेयोनिर्महेन्द्राय त्वा ॥३६॥

वज्राय नमः वज्रमावाहयामि ।

ॐ व्वसु च मे व्वसतिश्च मे कर्म च मे शक्तिश्च मे ऽर्थश्च मे
एमश्च म इत्या च मे गतिश्च मे यज्ञेन कल्पताम ॥३७॥

शक्तये नमः शक्तिमावाहयामि ।

ॐ इडऽएह्यदितऽएहि काम्याऽएत । मयि वऽकामधरणं भूयात् ॥३८॥

दण्डाय नमः दण्डमावाहयामि ।

ॐ खड्गोव्वैश्वदेवः श्वाकृष्णः कर्णो गर्दभस्तरक्षुस्ते रक्षसामिन्द्राय सूकरः सिंठ० होमारुतऽ कृकलासः पिप्पकाशकुनि स्तेशरव्यायै विश्वेषां देवानां पृषतऽ ॥३९॥

खड्गाय नमः खड्गमावाहयामि ।

ॐ उदुत्तमं वरुणपाशमस्म दवाधमं व्विमध्यमठं श्रथाय ।
अथा वयमादित्य व्रते तवानागसोऽअदितये स्याम ॥४०॥

पाशाय नमः पाशमावाहयामि ।

ॐ अठं० शुश्चमेरश्मिश्चमेऽदाभ्यश्चमेऽधिपतिश्चमऽउपाठं शुश्चमेऽन्तर्यामश्चमऽऐन्द्र वायवश्चमेमैत्रा वरुणश्च म मन्थी चमे यज्ञेन कल्पन्ताम् ॥४१॥

अङ्कुशाय नमः अङ्कुशमावाहयामि ।

पुनः उत्तर से वायव्यपर्यन्त—

ॐ आयङ्गौः पृश्निरक्रमीदस दन्मातरं पुरः ।
पितरश्च प्रयन्त्स्वः ॥४२॥

गोतमाय नमः गोतममृआवाहयामि ।

ॐ अयन्दक्षिणाव्विश्वकर्मा तस्य मनो व्वैश्व कर्मणंग्रीष्मोमानसस्त्रिष्टुब्ग्रैष्मी त्रिष्टुभःस्वारठं स्वारादन्त र्यामोन्तर्यामात्पञ्चदशऽ पञ्चदशाद् बृहद्भरद्वाजऽ ऋषिःप्रजापति गृहीतया त्वया मनोगृहणामिप्रजाभ्यः ॥४३॥

भारद्वाजाय नमः भरद्वाजमृआवाहयामि ।

ॐ इदमुत्तरात्स्वस्तस्य श्रोत्रꣳ सौवꣳ शरच्छ्रौत्र्यनुष्टुप् शारद्यनुष्टुभऽऐड-मैडाम्मन्थी मन्थिनऽए कविꣳ शए कविꣳ शाद्वैराजं विश्वामित्रऽऋषि॒ प्रजापति गृहीतया त्वया श्रोत्र गृहणामि प्रजाभ्य॒ ॥४४॥

विश्वामित्राय नमः विश्वामित्रमावाहयामि ।

ॐ त्र्यायुषं जगदग्नेꣳकश्यपस्य त्र्यायुषम् ।

यद्देवेषु त्र्यायुषं तन्नोऽअस्तु त्र्यायुषम् ॥४५॥

कश्यपाय नमः कश्यपमावाहयामि ।

ॐ अयंपश्चाद्विश्व व्यचास्तस्य चक्षुर्व्वैश्व व्यचसं वर्षा श्चाक्षुष्यो जगतीव्वार्षी जगत्याऽऋक्समम्रृक्समाच्छुक्रः शुक्रात्सप्तदशꣳ सप्त दशाद्वैरूपं जमदग्नि ऋषि॒ प्रजा पति गृहीतया त्वया चक्षुर्गृहणामि प्रजाभ्य॒ ॥४६॥

जमदग्नये नमः जमदग्निमआवाहयामि ।

ॐ अयं पुरोभुवस्तस्य प्राणो भौवायनो वसन्तꣳ प्राणायनोगायत्रीव्वासन्तीगायत्र्यै गायत्रङ्गायन्त्रादुपाꣳशुरुपाꣳशो स्त्रि वृत्त्रिवृतोरथन्तरं व्वसिष्ठऽऋषि॒ प्रजापति गृहीतया त्वया प्राणङ् गृहणामि प्रजाभ्य॒॥४७॥

वसिष्ठाय नमः वसिष्ठम आवाहयामि ।

ॐ अत्र पितरो मादयद्ध्वं यथाभागमा वृषायद्ध्वम् ।

अमी मदन्त पितरो यथाभागमा वृषायिषत ॥४८॥

अत्रये नमः अत्रिमआवाहयामि ।

ॐ तम्पत्नीभिरनुगच्छेमदेवा ꣳपुत्रैर्भ्रातृभिरुत वाहिरण्यैꣳ ।

नाकं गृब्भ्णाना ꣳसुकृतस्य लोके तृतीये पृष्ठेऽअधिरोचनेदिवः ॥४९॥

अरुन्धत्यै नमः अरुन्धतीमआवाहयामि ।

उसके बाहरी भाग में कृष्ण (तमोगुण की) परिखा में पूर्व से ईशान पर्यन्त क्रमशः स्थापन करें ।

ॐ अदित्यै रास्ना सीन्द्राण्याꣳउष्णीष॒ ।

पूषासिधर्मा यदीष्व । ऐन्द्रैꣳ ऐन्द्रौ ॥५०॥

ॐ अम्बेऽअम्बिके—कौमार्यै० कौमारी ॥५१॥

ॐ इन्द्रायाहिधियेषितोव्विप्रजूतः सुतावतः ।
उप ब्रह्माणि व्वाग्घतः ॥५२॥

ब्राह्म्यै नमः ब्राह्मीम् आवाहयामि ।

ॐ इन्द्रस्य क्रोडोऽदित्यै पाजस्यं दिशाञ्जत्रवोऽदित्यैभसञ्जीमूतान्हृदयौ पशेनान्त रिक्षंपुरीततानभऽउदर्येण चक्रवाकौमतस्नाभ्यांदिवं व्वृक्काभ्यां गिरीन्प्लाशिभि रुपलान्प्ली ह्वाव्वः मीकान्क्लोमभिग्ग्लौभिर्गुल्माह्विराभिः स्रवन्ती ह्रदा न्कुक्षिभ्याᳪ समुद्रमुदरेणव्वैश्वानरं भस्मना ॥५३॥

वाराह्यै नमः वाराहीम् आवाहयामि ।

ॐ समख्येदेव्याधियासन्दक्षिणयोरु चक्षसा ।
मामऽआयुःप्रमोषीर्मो अहन्तव व्वीरंविदेयतवदेविसन्दृशि ॥५४॥

चामुण्डायै नमः चामुण्डाम् आवाहयामि ।

ॐ रक्षोहणं व्वलगहनं व्वैष्णवी मिदमहन्तंव्वलगमुत्किरामि
चम्मे निष्ट्योचममात्यो निचखानेदमहन्तं व्वलगमुत्किराभि
चम्मे समानोचम समानोनिचखानेदमहन्तं व्वलगमुत्किरामि
चम्मे सबन्धुर्चम सबन्धुर्निचखानेदमहन्तं व्वलगमुत्किरामि
चम्मे सजातो चम सजातोनिचखानो त्कृत्याङ्किरामि ॥५५॥

वैष्णव्यै नमः बैष्णवीम् आवाहयामि ।

ॐ या ते रुद्र शिवातनूरघोरापाप काशिनी ।
तयानस्तन्वाशन्त मयागिरिशन्ताभि चाकशीहि ॥५६॥

माहेश्वर्यै नमः माहेश्वरीम् आवाहयामि ।

ॐ अम्बेऽआम्बिकेऽम्बालिके नमानयतिकश्चन ।
ससस्त्यश्वकः कांपील वासिनीᳪ स्वाहा ॥५७॥

वैनाय क्यै नमः वैनायकीम् आवहयामि स्थापयामि पूज्यामि । स्वागतोभव, स्थिरोभव, मम पूजां गृहाण सुखदो वरदो भवः ॥

इस प्रकार सर्वतोभद्रपीठ के देवताओं की स्थापना व पूजा करें तत्पश्चात् उसी के मध्य प्रधान देवता के हेतु कलश की स्थापना करें। उस कलश में या परयन्त्र या स्वर्णादि की प्रधान देवता की मूर्ति जो भी हो, अग्नि उत्तारण करें प्राण प्रतिष्ठा करने के उपरान्त स्थापना व यथा विधि पूजा करें।

उपर्युक्त विधि नान्दीश्राद्ध के साथ पद्धति के तान्त्रिक प्रयोगों में वर्णित लज्जा बीज (ह्रीं) की विधि से कांसे के थाल में अनार की लेखनी से सर्प की वामी की रज में लिखना उसी बीज का मानसिक जाप तथा वहीं पर लिखित अथर्वशीर्ष के पाठ से अद्भुत विचित्र अचिन्त्य घटनायें होंगी उनमें भयानक व लोभ आदि प्रपञ्चों में घसीट कर कर्म-विफल करने वाली भी होंगी उनसे प्रभावित न हों उपरोक्त कर्त्तव्य परायण रहने से निश्चित लाभ हुए है।

नव ग्रह वेदी क्षेत्रपाल योगिनी पीठ वास्तु पीठ सर्वतो भद्र आदि पीठों का वरुण कलश आदि का पूजन कर प्रधान देवता का पूजन करें। उसमें रात्रि सूक्त श्रीसूक्त पुरुषसूक्त शिव (रुद्र) सूक्तों से एक या सभी से अभिषेक करायें। ह्रीं बीज प्रतीकमात्र है। ऐसे ही अन्य देवता का करें।

## अथयज्ञ विधि निरूपणम्, अथर्व शौनकीयशाखा

**कौशिक सूत्र कण्डिका १३६—**

अभिजिति शिष्यानुपनीय श्वोभूतेसंभारान्संभरति ।१। दधिसक्तून्पालाश दण्डमहते वसनेशुद्धमाज्यंशान्ता ओषधीनवमुदकुम्भम् ।२। वाह्यतः शान्तवृक्षस्येध्मं प्राञ्चमुपसमाधाय ।३। परिसमूह्य पर्युक्ष्यपरिस्तीर्य वर्हिरुदपात्रमुपसाद्य परिचरणेनाज्यं परिचर्य ।४। नित्यान्दुरस्ताद्धो मान्हुत्वान्यमागौ च ।५। (प्रारम्भ-कौ०सू०कं-२ सूत्र से करै—

**इहेत देवीरमृतं वसाना हिरण्यवर्णा अनवद्यरूपाः ।**
**आपः (१) समुद्रो वरुणश्च[२] राजा संपातभागान्हविषो जुषन्तामा[३]**
**इन्द्र प्रशिष्टा वरुणप्रसूता अपः समुद्राद्दिवमुद्वहन्तु[४] ।**
**इन्द्र प्रशिष्टा वरुणप्रसूता दिवस्पृथिव्याः[५] श्रियमा वहन्तु ।** इति । कौ० कं० २।३

देखें (२।३) इन्द्राग्निभ्यामित्यमावास्यायाम् ।। कौ०कं० २ । सू० ३ ।। समाप्ति कं० १३५ सू० ४–७ से करे ।

अरणों प्रताप्य स्थण्डिलं परिमृज्य ।४। अथाग्निं जनयेत् ।५। इते एव

**प्रथमं[२] जज्ञे[३] अग्निराभ्यो योनिभ्यो अधिजात वेदाः[४] ।**

**सगायत्र्या त्रिष्टुभा जगत्यानुष्टुभा देवो देवेभ्यो हव्यं वहतुप्रजानन्निति जनयित्वा ।६।।** भवतं नः ५ समनसौ समोकसावित्येतेन सूक्तेन जुहुयात् ।७।। कंण्डिका २ ।।

सकलमंत्रपाठ कं० १०८ सूत्र २ देखें—यथा १४।१।६३

**भवतं नः समनसौ समोकसावरेपसौ। मांहि सिष्टं यज्ञपतिं मायज्ञं जातवेदसौ शिवौ भवतमद्य नः। अग्निनाग्निः संसृज्यते कविर्वृहस्पतिर्युवा। हव्यवाड् जुहास्यः। त्वं अग्ने**

अग्निना विप्रो विप्रेण सन्सता। सखा सख्या समिध्यसे। पाहिनो अग्न एकया पाहि न उतद्वितीयया। पाहि गीर्भिस्तिसृभिरूर्जांपते पाहि चतसृभिर्वसो। समीची माहनो पातामायुष्म त्या ऋचोमा सत्सि। तनूपात्साम्नो वर्सुविद लोकमनुसचराणि कं० १३९—५ से आगे

पश्चादग्नेर्दधिसक्तून्जुहोति-अग्नये ब्रह्म प्रजापतिभ्यांभृग्वङ्गिरोभ्य उशनसे काव्याय।६। ततोऽभयैरपराजितैर्गणकर्मभिर्विश्वकर्मभि रायुष्यैः स्वस्त्ययनैराज्यं जुहुयात्।७। (अभयगण, अपराजितगण, गणकर्मगण, विश्वकर्मगण, आयुष्गण, स्वस्त्ययनगण;।

मानोदेवा अहिर्वधीदरसस्यशर्कोटस्येन्द्रस्य प्रथमो रथो यस्ते सर्पो वृश्चिकस्तृष्टदंश्मा नमस्ते अस्तु विद्युते आरेऽसावस्मदस्तुयस्ते पृथुस्तनयित्नुरिति संस्थाप्य होमान्।८। (अथर्ववेद क्रमशः; ६।५६–१; ७।५६–५; १०।४–१; १२।१–४६; १।१३–१; १।२६–१; ७।११–१; होम में इनसे स्थापना करें।

प्रतिष्ठाप्यस्त्रुवं दधिसक्तून्प्राश्याचम्मोदकमुप समारभन्ते।९ अव्य चसश्चेति जपित्वा सावित्रीं ब्रह्मजज्ञानमित्येकांत्रिषप्तीयञ्च पच्छो वाचयेत्।१०। (अ०वे० १९।६८–१, ४।१–१; तथा विश्वकर्मागण। "येत्रिषप्ताः" १।१–१;

शेषमनुवाकस्य जपन्ति।११। (अ०वे० ४।१–२; ४।५–७)

यो यो भोगः कर्त्तव्यो भवति तं तं कुर्वते।१२।। सखल्वेतंपक्षमपक्षीयमाणः पक्षमनधीवान उपश्राम्येता दर्शात्।१३।

## अथ शान्ति विधानम्

प्रथमग्रहशान्ति अथवा अन्यशान्ति कार्यों में भी निम्न बातों का परिचय आवश्यक है।

| ग्रह | पिता | रङ्ग | स्थान | अधिदेवता | समिधा | फल | विशेष विवरण |
|---|---|---|---|---|---|---|---|
| १ सूर्य | कश्यप | रक्त | कलिंग | शम्भु | आक | सर्वव्याधीनाश | दहि-दूधघी मिश्रित |
| २ चन्द्र | ब्रह्मपुत्र | शुक्ल | यामुन | उमां | ढाक | समस्तसिद्धि | समिधाओं से होम |
| ३ भौम | रुद्र | रक्त | अवन्ती | स्कन्द | कत्था | ज्ञान-धन | प्रादेशमात्र लम्बी हों |
| ४ बुध | सोम | पीत | मागध | हरि | अपामार्ग | रूप-तेज | १०८ से कम न हों |
| ५ गुरु | ब्रह्म | पीत | सिन्धुद्वीप | ब्रह्मा | पीपल | प्रभा-ब्रह्मत्व | प्रतिदेव २८ हों |
| ६ शुक्र | भृगु | शुक्ल | सिन्धु | शक्र | दूब | सौभाग्य | |
| ७ शनि | रवि | कृष्ण | सौराष्ट्र | यम | शमी | पापशान्ति | |
| ८ राहु | प्रजापति | कृष्ण | सिंहल | काल | दूब | दीर्घायु-धर्म | |
| ९ केतु | अग्नि | कृष्ण | मध्यदेश | चित्रगुप्त | दाभः | धर्म-विद्या अर्थ | |

**वेदी**—हस्तमात्र या बाहुमात्र या अरत्निमात्र लम्बी चौड़ी

**कुण्ड**—इसी भाँति चौकोर एक योनि मेखला

**मण्डप**—चारद्वारमयविविध ध्वजाओं के सब दिशाओं में फहरायें "दूब पल्लवादि से युक्त खम्भों के पास घटमय जल, अथवा लिपा, पोता या धुला मकान।

**आचार्य**--अध्वर्यु-होता, विधिवेत्ता, वेदोच्चारण में प्रवीण, सदाचारी, निर्लोभी प्रतिग्रहदान से वर्जित हों। स्वस्थ हों, अंगहीन या अधिक अंग के न हों।

### वलिद्रव्य

**रवि**—चावल, गुड़। **चन्द्रमा**—खीर। **भौम**—हवि। **बुध**—दूध-भात। **गुरु**—खिचड़ी (षष्ठिक्यं)। **शुक्र**—(दध्ना) दही भात। **शनि**—हविः। **राहु**—श्रृताश्रृतम्। **केतु**—विचित्र अन्न।

**पूजाद्रव्य**—विविध रंग के वस्त्र, पुष्प, गन्ध, गुग्गुल धूप, धेनु, शंख, बछड़ा, स्वर्ण, श्वेत गौ, भेड़, बकरी। विशेष अध्याय ६ में देखें।

### शान्ति ॥

### अथ अग्नेः सम्मुख करण प्रकारप्रश्नम्

आहुती देवमुत्पाद्यपश्चात्कर्म समाचरेत्।
अधोवक्त्रोर्द्धपादश्च प्राङ्मुखो हव्य वाहन॥
तिष्ठत्येवं प्रभावेन आहुति कस्य दीयते॥

अस्योत्तरः।

सपवित्राम्बु हस्तेन वन्हेः कुर्यात्प्रदक्षिणम्॥
हव्यवाट् सलिलं दृष्ट्वा विभीतो संमुखो भवेत्॥

### अग्नेरास्यादीनांलक्षणम्॥

सधूमोग्निः शिरोज्ञेयं निर्धूमश्चक्षुरेवहि। ज्वलत्कृष्णोभवेत्कर्णः काष्ठमग्रे मनस्तथा॥ प्रज्वलितोऽग्निस्तथाजिह्वाएतदेवाग्नि लक्षणम्॥

आस्यान्तर्जुहुयादग्नेविपश्चितसर्वकर्मषु॥ कर्णेहोमेभवेद्व्याधिर्नेत्रेऽन्धत्वमुदीरितम्॥ नासिकायांमनः पीड़ामस्तकेधनसंक्षयः॥ स्वर्णसिन्दूरवालार्ककुंकुमक्षौद्रसन्निभः॥ सुवर्णरेतसो वर्णःशोभनःपतिकीर्तितः॥ भेरीवादित्रहस्तीन्द्रध्वनिर्वह्नेः शुभावहः॥ नागचम्पकपुन्नाग पाटलायूथिकानिभः॥ पद्मेन्द्रीवरकल्हार सर्पिगुर्गुलसन्निभः। पावकस्य शुभोगन्धइत्युक्तं तन्त्रवेदिभिः॥ प्रदक्षिणास्त्यक्तकम्पाश्छत्राभः शिखिनः शिखा॥ शुभदा यजमानस्य राज्यस्यापिविशेषतः॥ कुन्देन्दुधवलोधूमो वह्नेः प्रोक्तः शुभावहः॥ कृष्णः कृष्णगतेर्वर्णोः यजमानं विनाशयेत्॥ खरस्वरसमोवन्हेर्ध्वनिः सर्वविनाशकृत॥ पूतिगन्धोहुत भुजोहोतुः दुःखप्रदोभवेत्॥ छिन्नावतोशिखा कुर्यान्मृत्युंधन परिक्षयम्॥ शुकपक्षनिभोपारावत समप्रभः॥ हानिं तुरगजातीनांगवांच कुरुते चिरात्॥ एवं विधेषु दोषेषुप्रायश्चित्तायदेशिकः॥ मूलेनाज्येनजुहुयात्पञ्चविंशतिमाहुतीः॥१६६॥ शारदायां ५ पटले होमोपयुक्त कुण्डादि नियम ज्ञानार्णवे॥

अथ होमोपयुक्तानि कुण्डानि तेषांपृथक्त्व न्यायेन क्रत्वर्थपुरुषार्थोभय रूपताञ्च दर्शयति ॥

यौनिकुण्डे भगाकारे वर्तुले वाऽर्ध चन्द्रके ॥ नवत्रिकोणकुण्डे वा चतुरश्रेष्ठपत्रके ॥१॥
योनिकुण्डेभवेद्वाग्मीभगेचाकृष्टिरुत्तमा ॥ वर्तुलेतुभवेल्लक्ष्मीरर्द्धचन्द्रे त्रयंभवेत् ॥२॥
नवत्रिकोण कुण्डेतु खेचरत्वंप्रजायते ॥ चतुरस्त्रेभवेच्छान्तिर्लक्ष्मीः पुष्टिररोगता ॥३॥
पद्माभेसर्वसम्पत्तिरचिरादेव जायते ॥ अष्टकोणे तुसुभगे समोहितफलंभवेत् ॥४॥

अथात्रहोमद्रव्याणां प्रमाणमभिधोयते ॥ कर्णमात्रंघृतं होमे शुक्तिमात्रंपयः स्मृतम् ॥ उक्तानि पञ्चगव्यानि तत्समानिमनीषिणः ॥ तत्समंमधु दुग्धान्नमक्षमात्रमुदाहृतम् ॥ दधि प्रसृतिमात्रंस्याल्लाजाः स्युर्मुष्टि सम्मिताः ॥ पृथुकास्तत्प्रमाणाःस्युःशक्तवापितथोदिताः ॥ गुड़पलार्द्धमानं स्याच्छर्करापितथामता ॥ ग्रासार्द्धंचरुमानंस्यादिक्षु-पर्वाविधिर्मता ॥ एकैकंपत्र पुष्पाणि तथाऽपूपानि कल्पयेत् ॥ कदलोफलनारंगफलान्येकैकशोविदुः ॥ मातुलिङ्गचतुखण्डं पनसं दशधाकृतम् ॥ अष्टधानारिकेलानिखण्डेतानिविदुर्बुधाः ॥ त्रिधाकृटंफलं विल्वं कपित्थं खण्डितं त्रिधा ॥ उर्वारुक फलंहोमेवादितंखण्डितंत्रिधा ॥ फलान्यन्यानिखण्डानिसमिधः स्युर्दशाङ्गुलाः ॥ दूर्वात्रयंसमुद्दिष्टंगुडूचीचतुरंगुलाः ॥ व्रीहयोमुष्टिमात्रास्युर्मुद्गमाषयवाअपि ॥ तण्डुलास्युर्तदर्द्धांशाः कोद्रवा मुष्टिसम्मितः ॥ गोधूमरक्तकमला विहितामुष्टिमानतः ॥ तिलाश्चुलुक मात्रास्युः सर्षपास्तत्प्रमाणकाः ॥ शुक्तिप्रमाणंलवणंमरीचान्येकविंशतिः ॥ पुरुर्वदरमानःस्याद्रामठंतत्समंस्मृतम् ॥ चन्दनागुरुकस्तूरोकर्पूरकुंकुमानिच ॥ तिन्तडोवीजमा-समुद्दिष्टानिदेशिकः ॥ वैश्वानरं स्थितं ध्यायेत्समिद्धोमेषुदेशिकः ॥ शयानमाज्यहोमेषुनिषण्णं एतानि शेषवस्तुषु ॥

### अथ उत्तर तन्त्र (होमविधि)

ब्रह्मवरण-पञ्चभू संस्कार-पूर्वक-अग्नि स्थापन

सर्व प्रथम कर्त्ता जपे—कर्ता ब्रह्मा।

**ॐ अव्यसश्चव्यचसश्चबिलं विष्यामिमायया ।**
**ताभ्यामध्दृत्यवेदमथ कर्माणिकृण्महे ॥**

ॐ नमो ब्रह्म वेदाय, ॐ नमो अथर्व वेदाय, ॐ ब्रह्मणे नमः; ॐ अथर्वणे नमः ॐ अथर्वाङ्गिरसेभ्यो नमः; ॐ भूर्भुवः स्वर्जनदोऽम् ।

पुरोडाश-रस प्राशन (दधि-मधु-घृत-रसे) कर, यजमान; ब्रह्मावरणन के समय जप करें।

**ॐ भूपते भुवनपते भुवांपते महतो भूतस्यपते ब्रह्माणं त्वा वृणीमहे ।**

(तै० ब्रा० ३।७।६।१)

यजमान, पत्रपुष्प, दक्षिणा, फल, अक्षत लेकर ब्रह्मा से विनय करें और ग्रन्थि बन्धनादि करें। वै० श्रौ० सू० १७ ब्रह्मा जप करें।

ॐ अहं भूपतिः, अहं भुवनपतिः; अहं भुवांपतिः; अहं महतो भूतस्यपतिः; तदहं मनसे प्रब्रवीमि मनो वाचे वागगायत्र्यै, गायत्र्युष्णिह, उष्णिगनुष्टुभे ऽनुष्टुब् बृहत्यै बृहती पङ्क्तये पङ्क्तिस्त्रिष्टुभे; त्रिष्टुब् जगत्यै जगती प्रजापतये प्रजापति विश्वेभ्यो देवेभ्यः ॐ भुर्भुवः स्वर्जनदो३म् ।

(तै० ब्रा० ३।७।६।१) वै० श्रौ० सू० १८

ॐ अहमवाग्वसोः सदने सीदामृतस्य सदने सीदामि, सत्यस्य सदने सीदामि, इष्टस्य सदने सीदामि पूर्तस्य सदने सीदामि मा मृषदेववर्हिः स्वासस्थं त्वा ध्यासदेयमूर्णमदमनभिशोकम् । कौ० सू०

ॐ इन्द्रस्य बाहू स्थाविरौ वृषाणौचित्राइमा वृषभौ पारयिष्णू ।
तौयोक्षे प्रथमो योग आगते याभ्यां जितमसुराणां स्व १ र्यत् ॥

(१९।१३-१) अथर्व

ॐ आशुः शिशानो वृषभोनभीमोघनाघनः क्षोभणश्चर्षणीनाम् ।
सं क्रन्दनोऽनिमिषएकवीरः शतंसेना अजयत्साकमिन्द्रः ॥२॥
सं क्रन्दनेननिमिषेण जिष्णुना ऽयोध्येन दुच्यवनेन धृष्णुना ।
तदिन्द्रेण जयत तत्सहध्वं युधो नरइषु हस्तेन वृष्णा ॥३॥
सइषु हस्तैः सनिषङ्गिभिर्वशीसंसृष्टा स युध इन्द्रो गणेन ।
सं सृष्टजित्सोमपाबाहुशर्ध्यु १ ग्रधन्वाप्रति हिताभिरस्ता ॥४॥
ॐ बलविज्ञायः स्थविरः प्रवीरः सहस्वान्वाजीसहमान उग्रः ।
ॐ अभिवीरो अभिषत्वा सहोजिज्जैत्रमिन्द्र रथमा तिष्ठ गोविदन् ॥५॥
इमंवीरमनुहर्षध्वमुग्रमिन्द्रं सखायो अनुसं रभध्वम् ।
ग्रामजितं गोजितं बज्रबाहुं जयन्त मज्मप्रमृणन्त मोज सा ॥६॥
अभिगोत्राणि सहसागाहमानोऽदाय उग्रः शतमन्युरिन्द्रः ।
दुच्यवनः पृतनाषाडयोध्यो३ स्माकं सेना अवतप्र युत्सु ॥७॥
बृहस्पते परिदीयारथेन रक्षोहामित्रां अपवाधमानः
प्रभञ्जंछ त्रून्प्रमृण न्नमित्रांनस्माकं मेध्यविता तनूनाम् ॥८॥

इन्द्र एषांनेता बृहस्पतिर्दक्षिणायज्ञः पुरएतुसोमः ।
देवसेनानामभिभञ्जन्तीनां जयन्तीनांमरुतो यन्तमग्र्यें ॥९॥
इन्द्रस्य वृष्णो वरुणस्यराज्ञ आदित्यानांमरुतांशर्ध उग्रम् ।
महामनसांभुवनच्यवानांघोषोदेवानां जयतामुदस्थात् ॥१०॥
अस्माकमिन्द्रः समृतेषुध्वजेष्वस्माकं याइषवस्ता जयन्तु ।
अस्माकं वीराउत्तरेभवन्त्वस्मान्देवासोऽवताहवेषु ॥११॥

इनका ब्रह्मा जप करै ।

तथा पतिपत्नी ग्रन्थि वन्धन इस ऋचा से करे ।

ॐ आशासाना सौमनसंप्रजां सौभाग्यं रयिम् ।
पत्युरनुव्रताभूत्वासं नह्यस्वामृतायकम् ॥१४।१।४२

"याज्ञिक यजमानाचार्य निम्नमन्त्रों से अभिमन्त्रित कर मधुपर्क पान करें ।

"सोमेन वक्ष्यमाणः" ऐन्द्राग्नम अनुसृष्टम् "यस्य पिता पितामहाः सोमं नपिबेत् । (गो० ब्रा० २।१।१६) वै० श्रौ० अ० ३ कं ९ (११ सू १)

ऋत्विजो वृणीते ॥२॥ सोमेन "वक्षमाणः ऋत्विजः" ब्रह्माऽऽद्यान् वृणीते । यज्ञकर्म कर्तृतया स्वीकुर्वते वृणीते ऋत्विजः गृहीत मधुपर्कान् । येन सोम" (अ० वे० ६।७-१)

ॐ येनसोमादितिः यथामित्रावायन्त्यद्रुहः । तेनानोऽवसागहि ॥१॥
येनसोमसाहन्त्यासुरान्‌रन्धयासिनः । तेना नो अधि वोचत ॥२॥
येनदेवा असुराणामोजांस्य वृणीध्वम् । तेना नः शर्म यच्छत ॥३॥

यजु० (कुण्ड) (वेदी) अथर्व

अ० कां० ७ सू० ९९ अथर्वा० । वेदी । भुरिक् त्रिष्टुभ् ।

शौनकीय विधि "वेदी अनुमंत्रण"

"परिस्तृणीहि" (७।१०४) इससे श्रौत दर्श पूर्णमास आदि समस्त यज्ञों में वेदी को कुशाग्रों, दाभों से आच्छादित करने मैं अनुमन्त्रण दाभों का करें । (वेदी यजमान संमित होने से उसकी समानाकृति (यजमान की) होती है वै० १।६।७ आच्छादित दर्भ यजमान के पुण्यभोग स्थान में सुवर्णमय अलङ्कार हों ।

ॐ परि स्तृणीहि परि धेहि वेदीं मा जामि मोषीरमुया शयानाम् ।
होतृषदनं हरितं हिरण्ययं निष्काएतेयजमानस्य लोके ॥१॥२५१

९८ (१०२) हविः अनुमन्त्रण, उपस्थान

"संर्वहि" (७।१०३) से स्मार्त, दर्श, पूर्णमास यागों में आज्यशेष से युक्त, हवि, पुरोडाश युक्त र्वहि सर्वदेव प्रमुख को प्राप्त हो।

"स्वाहा इदं र्बहि स्वाहुतम् अस्तु" वै० १।४ कौ० १।६।

अथर्वा । इन्द्रः, विश्वेदेवाः । विराटत्रिष्टुम् ।

ॐ सं बर्हिरक्तं हविषा घृतेन समिन्द्रेण वसुना सं मरुद्भिः ॥

सं देवैर्विश्वदेवेभिरक्तमिन्द्रं गच्छतु हविः स्वाहा ॥१।२५०

यज्ञः (अ० कां १९।१)

"सं संस्रवन्तु" (१९।१) इस सूक्त से पुष्टि; तथा लक्ष्मी प्राप्ति कर्मो में" जौ, गेहूं धान, तिल, कांगनी, सवां आदि से युक्त खिचड़ी में दही, मधु मिला, अभिमन्त्रित कर होम करें। शेष चरु (भोग) को इसीसे अभिमन्त्रित कर खायें। कौ० ३।२। शान्ति कर्मो के लिये नदी या सरोवर, झरना, समुद्र-आदि के लाये पावन जल को अभिमन्त्रित करें। इसी से "अमृता नामक विश्वभेषजी शान्ति करें। "आपश्च विश्वभेषजी" ऋ० वे० १।२३।२०

"अप्सु मे सोमो अब्रवीद् अन्तर्विश्वानि भेषजा ॥ ऋ० १०।९।६॥ शंत आपो ॥ (१९।२)

१-३ ब्रह्मा । यज्ञः, चन्द्रमाश्च । १-२ पथ्यावृहती, ३ पंक्ति प्रपाठक ३५

सं सं स्रवन्तु नद्य १ः संवाताः सं पतत्रिणः ।

यज्ञमिमं वर्धयतागिरः संस्राव्येण हविषा जुहोमि ॥१॥

इमं होमा यज्ञमवतेमं संस्रावणा उत ।

यज्ञमिमं वर्धयतागिरः संस्राव्येण हविषा जुहोमि ॥२॥

रूपं रूपं वयो वयः संरभ्यैनं परिष्वजे ।

यज्ञमिमं चतस्रः प्रदिशो वर्धयन्तु संस्राव्येण हविषा जुहोमि ॥३।

आपः कां १९।२

इससे घटादि में समस्त पावन स्रोतों-जलों, नद, नदी आदि के अभिमानी देवताओं का आवाहन तथा वन्दना करें।

१-५ सिन्धुद्वीपः। आपः अनुष्टुप् ।छन्दः जलाभिमानीदेवानुमन्त्रणेविदियोगः

शंत आपोहैमवतीः शमु ते सन्तूत्स्याः ।

शं ते सनिष्यदा आपः शमु ते सन्तु वर्ष्याः ॥१॥

शं त आपो धन्वन्याः शं ते सन्त्वनूप्याः ।

शं ते खनित्रिमा आपः शं याः कुम्भेभिराभृताः ॥२॥

अनभ्रयः खनमाना विप्रा गम्भीरे अपसः ।
भिषग्भ्यो भिषक्तरा आपो अच्छा वदामसि ॥३॥

अपामह दिव्याऽ नामपां स्रोतस्याऽ नाम् ।
अपामह प्रणेजने ऽश्वा भवथ वाजिनः ॥४॥

ता अपः शिवा अपोऽयक्ष्मं करणीरपः ।
यथैव तृप्यते मयस्तास्त आ दत्त भेषजीः ॥५॥

कां १६। (३) जातवेदाः ।

"दिवस्पृथिव्याः" (१६।३) तथा "प्रातरग्निम्" (६।१); "गिरावरगराटेषु" (३।१६) मेधा-जनन में विनियोग करें। "श्रुतकर्णाय" (१६।३-४) ऋचा अतीन्द्रियार्थदर्शी सर्व ज्ञातव्य वेदज्ञान तथा अभय प्रद है और क्रोधी (द्वेषकर्त्ता) के क्रोध शमन करने वाला भी है।

१-४ अथर्वाङ्गिराः अग्निः। त्रिष्टुप्; २ भुरिक छन्दासि उपर्युक्त प्रयोजन सिद्धये विनियोगः।

दिवस्पृथिव्याः पर्यन्तरिक्षाद्वनस्पतिभ्यो अध्योषधीभ्यः
यत्रयत्र विभृतो जातवेदास्तत स्तुतो जुषमाणो न एहि ॥१॥

यस्ते अप्सु महिमा यो वनेषु यओषधीषु पशुष्वप्स्व १ न्तः ।
अग्ने सर्वास्तन्व १ः संरभस्व ताभिर्न एहि द्रविणोदा अजस्रः ॥२॥

यस्ते देवेषु महिमा स्वर्गोयाते तनूः पितृष्वा विवेश ।
पुष्टिर्याते मनुष्येऽषु पप्रथेऽग्ने तया रयिमस्मासुधेहि ॥३॥ (११)

श्रुत्कर्णाय कवये वेद्याय वचोभिर्वाकैरुप यामिरातिम् ।
यतो भयमभयं तन्नो अस्त्वव देवानां यज हेडो अग्ने ॥४॥ (१२)

आकूति : का० १६ सू-४

"यामाहुति" (१६।४) इन तीन ऋचाओं से मानसिक-वाचिक-कायिक समस्त अभीष्ट तथा जन्मान्तरीयज्ञान फलप्राप्ति हेतु जप, उपस्थान-होम करें।

१-४ अथर्वाङ्गिराः । अग्निः । त्रिष्टुप्, १ पञ्चपदाविराडति जगती, २ जगति ।

यामाहुतिं प्रथमामथर्वायो जाता या हव्यमकृणोज्जातवेदाः ।
तां त एतां प्रथमो जोहवीमि ताभिष्टुप्तो वहतुहव्यमग्निरग्नये स्वाहा ॥१॥

आकूतिं देवीं सुभगां पुरो दधे चित्तस्य माता सुहवा नो अस्तु ।
यामाशामेमि केवली सामे अस्तु विदेयमेनां मनसि प्रविष्टाम् ॥२॥

आकूत्या नो बृहस्पत आकूत्या न उपा गहि ।
अथो भगस्य नो धेह्यथो नः सुहवो भव ॥३॥

बृहस्पतिर्म आकूतिमाङ्गिरसः प्रति जानातु वाचमेताम् ।
यस्य देवा देवताः संबभूवुः स सुप्रणीताः कामो अन्वेत्वस्मान् ॥४॥ (१६)

ऋत्विज् ब्रह्मा आदिको वरण कर, याज्ञिकों को स्वयं भी यजमान मधुपर्क पान कराये और करे। (कौ० सू० ४६।४) याज्ञिक अनुभवी वृद्ध श्रोत्रिय हों अथर्वाऽङ्गिरोविदं ब्रह्माणम्। सामविदम् उद्गातारम्। ऋग्विदं होतारम् यजुर्विदम् अध्वर्युम् (वै० सू० ख)

इस भांति ब्रह्मा, उद्गाता, होता और अध्वर्यु आदि का वरण व मधुपर्क करने के उपरान्त अध्वर्युः ब्रह्माजो से यज्ञारम्भ की प्रार्थना करें। कि निम्न भाँति के सभी जन्म-जन्मान्तरीय, क्षेत्रीय पाप शाप, दुख, संकट निवारक यज्ञ प्रारम्भ की आज्ञा शक्ति क्षमता प्रदान करें।

ॐ देव कृतस्यैनसोऽवयजनमसि स्वाहा। पितृ कृतस्य मनुष्य कृतस्य आत्म कृतस्यऽनाज्ञाता ज्ञात कृतस्य। यद्वो देवाश्चकृम जिह्वया गुरुमनसो वा प्रयुती देव हेडनम्। अरा वा योनो अभिदुच्छुना यते तस्मिंस्तदेनोवसवो निधेतन। (ऋग्वेद १०।३७।१२)

ॐ उभा कवी युवानां सत्यादा धर्मणस्परि। सत्यस्य धर्मणा विसख्या निसृजामहे। वै० श्रौ० अ० ३ कं० १३।२३।१४

इसी के साथ अथर्व कां ६ सू० ११३ व ११४ से प्रार्थना करे।

ॐ यद्देवादेवहेडनं देवासश्चकृमावयम् ।
आदित्यास्तस्मान्नोयूयमृतस्यर्तेन मुञ्चत ॥१॥
ऋतस्यर्तेनादित्यायजत्रामुञ्चतेह नः ।
यज्ञंयद्यज्ञवाहसः शिक्षन्तोनोपशेकिम् ॥२॥
मेदस्वता यजमानाः स्रुचाज्यानि जुह्वतः ।
अकामाविश्वेवोदेवाः शिक्षन्तो नोपशेकिम ॥६।११४-३

ॐ त्रितेदेवा असृजतै तदेनंस्वितएनन्मनुष्येऽषुममृजे ।
ततो यदि त्वाग्राहिरानशेतां तंदेवा ब्रह्मणा नाशयन्तु ॥ (अ० ६।११३-१)
मरीचीर्धूमान्प्रविशानुपाप्मन्नुदारान्गच्छोतवानीहारान् ।
नदीनांफेनाँ अनुतान्विनश्यभ्रूणघ्निपूषन्दुरितानिमृक्ष्व ॥२॥
द्वादशधानिहितं त्रितस्यापमृष्टंमनुष्यैनसानि ।
ततोयदि त्वाग्राहिरानशेतांतंदेवाब्रह्मणा नाशयन्तु ॥६।११३-३

ये मन्त्र आहुति, मार्जन, अवभृथस्नान, मंत्रों के कर्मों में भी विनियोग करें।
सर्व प्रायश्चित होम, आदित्यादिग्रह होम, पूर्णाहुति आदि में भी प्रयोग करें।
उपरोक्त रीति से ब्रह्मा से अध्वर्युः प्रार्थना करते हुए यह भी जपै

ॐ भूर्भुव स्वर्जनदोऽम् । ॐ ब्रहन्नपः प्रणेष्यामि, तव प्रणय ।

ब्रह्म आदेश दें और जपें।

ॐ यज्ञं देवता वर्धयत्वम् । नाकस्यपृष्ठेस्वर्गेलोकेयजमानोऽस्तु, सप्त ऋषीणां सुकृतां यत्र लोकस्तत्रेमं यज्ञं यजमानंधेहि; ॐ भूर्भुव स्वर्जनदो३म् । प्रणय । श्रौ० सू० कं० २।१। कौ० सू० १।१४॥

तत्पश्चात्पञ्चभू संस्कार करे। विशेष विधि यहाँ दी जाती है, शेष आगे दी हुई है। वेदी का जल के पात्र में चावल, जौ, शमीपत्र, पुष्प, चन्दन डालकर उपस्थान करे।

ॐ यस्यांमन्नं व्रीहियवौयस्यां इमाः पञ्च कृष्टयः ।
भूम्यैपर्जन्यपत्न्यै नमोऽस्तुवर्षमेदसे ॥ (१२।१-४२)

कुशाग्रों से वेदी को तोन बार दक्षिण से उत्तर को रेखाङ्कित कर बुहारे। यह "स्फेन" से खींचे।

ॐ देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यांपूष्णोहस्ताभ्यांप्रसूत आरंभे (१९।५१-२)
गोमयोदकेन उपलिप्य ।

ॐ यस्यां कृष्ण मरुणञ्च सहिते अहोरात्रेविहिते भूम्यामधि ।
वर्षेण भूमिः पृथिवी वृताबृतासानो दधातुभद्रयाप्रियेधामनिधामनि ॥ (१२।१-५२)

होम मे पूर्व स्रुवमूल को पकड़ कर जपे और स्रुवा में कलावा (मौलि) बाँधे, पूजा करें।

ॐ विष्णोर्हस्तोऽसिदक्षिणः पूष्णादत्तो वृहस्पतेः ।
तंत्वाहंस्रुवमाददेदेवानां हव्य वाहनम् ॥
अयंस्रुवो विदधाति होमाञ्छताक्षर छन्दसा जागतेन ।
सर्वायज्ञस्य समनक्ति विष्टा वार्हस्पत्येष्टिः शर्मणा दैव्येन ॥

स्रुवा से वेदीपर दक्षिण से उत्तर ३ रेखायें "अंगुष्ठ से तर्जनी की चौड़ाई मात्र" प्रादेशमात्र खीचे ।

ॐ इन्द्रः सीतां निगृह्णातुतां पूषाभिरक्षतु ।
सानः पयस्वती दुहामुत्तरामुत्तरां समाम् ॥ (३।१७-४)

पुनः ऋचा (१२।१-५२) उपर्युक्त[1] से सम्प्रोक्षण करे ।

वेदी के हवनीय प्रदेश की परिधियों को अनुमन्त्रित करे। पत्थर रखें ।

ॐ यस्यां वृक्षा वानस्पत्या ध्रुवास्तिष्ठन्ति विश्वहा ।
पृथिवींविश्वधायसंभृतागच्छावदामसि ॥१२।१-२७

वेदी की परिधि अनुमन्त्रण के उपरान्त

निम्न अ० वे० कां ७ सूक्त २८ ॥ वेदा स्वस्ति । के
मेधातिथिः ऋषि । वेदः । देवता । त्रिष्टुप् छन्द

दर्शपूर्णमासादि यागेषु दर्भमुष्टि; वेद अनुमन्त्रणे, पवित्री धारणे च विनियोग ।
इससे दर्भ मुष्टि अनुमन्त्रित करें ।

वेदः स्वस्तिर्द्रुघणः स्वस्तिपरशुर्वेदिः परशुर्नः स्वस्ति ।
हविष्कृतो यज्ञिया यज्ञकामास्तेदेवासोयज्ञमिमंजुषन्ताम् ॥७।२९।१

कुश परिस्तरण

वेदी तथा कुशमुष्ठि अनुमन्त्रण कर निम्नमंत्र (७।९९(१०४) से कुश परिस्तरण करें।

ॐ परिस्तृणीहि परिधेहिवेदिं माजामिमोषीरमुयाशयानाम् ।
होतृषदनं हरितं हिरण्ययं निष्काएते यजमानस्यलोके ॥

पुनः वेदी तथा समस्त सामिग्री आदि का संम्प्रोक्षण करें ।

ॐ पृथिव्यैश्रोत्राय वनस्पतिभ्योऽग्नये ऽधिपतय स्वाहा ॥१
प्राणायान्तरिक्षाय वयोभ्योवायवे ऽधिपतय स्वाहा ॥२

दिवेचक्षुषे नक्षत्रेभ्यः सूर्यायाधिपतये स्वाहा ॥६।१०।३

समिधाओं का अनुमन्त्रण

ॐ अग्नेर्मन्वेप्रथमस्यप्रचेतसः पाञ्चजन्यस्य बहुधायमिन्धते ।
विशोविशः प्रविशिवांसमीमहसनो मुञ्चत्वंहसः ॥४।२३-१

यज्ञमण्डप के द्वारों का पूजन

कां ५ सू० १२ ऋ० ५-अंगिराऋषिः । जातवेदा देवता । अनुष्टुपछन्द
यज्ञमण्डप द्वार अनुमन्त्रणे विनियोग ।

व्यचस्वतीरुर्विया विश्रयन्तांपतिभ्यो न जनयः शुम्भमानाः ।
देवींद्वारो बृहतीर्विश्वमिन्वा देवेभ्योभवतसुप्रायणाः ॥५

यज्ञ देव का आवाहन

आजुह्वान ईड्यो वन्द्यश्चा याह्यग्ने वसुभिः सजोषाः ।
त्वं देवानामसि यह्व होता सएनान्यक्षीषितोयजीयान् ॥३

यज्ञदेव को आसन-कुशपरिस्तरण

प्राचीनं बर्हिः प्रदिशापृथिव्या वस्तोरस्या वृज्यते अग्रे अह्नाम् ।
व्युऽप्रथते वितरं वरीयो देवेभ्यो अदितये स्योनम् ॥४
त्वंभूमिमत्येष्योजसा त्वं वेद्यां सीदसि चारुरध्वरे ।
त्वांपवित्रमृषयोऽभरन्त त्वंपुनीहिदुरितान्यस्मत् ॥१९।३३।३
दर्भेण त्वं कृणवद्वीर्याऽणिदर्भंविभ्रदात्मनामा व्यथिष्ठाः ।
अतिष्ठाया वर्चसाधान्यान्त्सूर्यइवाभाहिप्रदिशश्चतस्रः ॥१९।३३।५

पवित्र करनेवाली ३ कुशाओं का अनुमन्त्रण

सहस्रार्घः शतकाण्डः पयस्वानपामग्निर्वीरुधां राजसूयम् ।
सनोऽयंदर्भः परिपातुविश्वतो देवोमणिरायुषा संसृजाति नः ॥१९।३३।१

सप्तउपयमन कुशाग्रों को अनुमंत्रण कर घीमें डुबा कर प्रज्वलित करके स्वआसन पर स्थित रह सव्य (प्रदक्षिणाक्रम से) तीनबार वेदी को परिक्रमाकर तूष्णीं अग्नि में छोड़ें ।

घृतादुल्लुप्तो मधुमान्पयस्वान्भूमिदृंहोऽच्युतश्च्यावयिष्णुः ।
नुदन्त्सपत्नानधरांश्च कृण्वन्दर्भारोहमहतामिन्द्रियेण ॥१९।३३।२

प्रादेशमात्र समिधा ३ अनुमन्त्रितकर घीमें डुबाकर प्रज्वलितकर उपर्युक्त परिक्रमा क्रम मे ३ बार वेदी की प्रदक्षिणा कर तूष्णीं अग्नि में छोड़े ।

समिध्दो अद्यमनुषोदुरोणेदेवोदेवान्यजसि जातवेदः ।

आच वहमित्रमहश्चिकित्वान्त्वं दूतः कविरसि प्रचेताः ॥५।१२।१

चरु-घृत, शाकल्य अनुमन्त्रण

सं बर्हिरक्तं हविषा घृतेन समिन्द्रेण वसुना संमरुद्भिः ।

सं देवैर्विश्वदेवेभिरक्तमिन्द्रं गच्छतु हविः स्वाहा ।

इसीसे पूर्णाहुति दी जावे ।

आचार्य व्याहृति होमकर अग्नि का पूजन करें ।

अग्निः स्रुचो अध्वरेषु प्रयक्षसयंक्षदस्यमहिमानमग्नेः ॥५।२७।६

दैवा होतारऊर्ध्वमध्वरं नोऽग्नेजिह्वयाभिगृणतगृणतानः स्विऽष्टये ।

तिस्रोदेवीबर्हिरेदंसदन्तामिडासरस्वतीमहीभारतीगृणाना ॥५।२७।९

अग्ने स्वाहा कृणुहि जातवेदः ।

इन्द्राययज्ञं विश्वे देवाहविरिदं जुषन्ताम् ॥५।२७।१२

तदनन्तर पूर्व पीठस्थ आवाहित देवों के प्रति होमकर । पूर्व सङ्कल्पित होम स्वगृह्यसूत्र परम्परा से करें। अन्य सम्बन्धित विधि पूर्वोल्लिखित ही है ।

उपर्युक्त विधि ब्रह्मवेद के द्वारा जब की जावे तो पौराणिक या तान्त्रिक या अन्य गृह्यसूक्त विधि का प्रयोग न करें। एक ही गृह्यसूक्त (जिससे प्रारम्भ करें उसी) से पूर्ण करें ।

अक्षत पुष्पादि डालकरमृन्मयघट (सकोरे) रक्खे। समिधाओं को इस मन्त्र से अनुमन्त्रित करे ।

अं होलिङ्गगणमें "अग्नेमेन्वे" (४।२३)

यह बृहच्छान्ति के साथ देखें ।

तीन बार अग्नि, प्रणीता, प्रोक्षणी, स्रुवा आदि का इससे संमार्जन कुशा से करे ।

ॐ वाजं अग्ने वाजजितंवाजं त्वा सरिष्यन्तं वाजजितं संमार्ज्मि ॥ वै० श्रौ० सू० कं० २ सू १२

और "अर्वाञ्च" (श्रौत) अग्नि का आवाहन करे इसकी विधि पूर्व दी जा चुकी है इसी प्रकार जलाक्षत ले परिक्रमा करे ।

